॥ अक्षमालिकोपनिषत् ॥

अकारादिक्षकारान्तवर्णजातकलेवरम् ।
विकलेवरकैवल्यं रामचन्द्रपदं भजे ॥

ॐ वाङ्मे मनसि प्रतिष्ठिता मनो मे वाचि प्रतिष्ठितमाविरावीर्म एधि ॥ वेदस्य म आणीस्थः श्रुतं मे मा प्रहासीरनेनाधीतेनारात्रा-न्सन्दधाम्यृतं वदिष्यामि सत्यं वदिष्यामि ॥

तन्मामवतु तद्वक्तारमवतु अवतु मामवतु वक्तारमवतु वक्तारम् ॥

ॐ शान्तिः शान्तिः शान्तिः ॥

हरिः ॐ । अथ प्रजापतिर्गुहं पप्रच्छ भो ब्रह्मन्नक्षमालाभेदविधिं ब्रूहीति । सा किं लक्षणा कति भेदा अस्याः कति सूत्राणि कथं घटनाप्रकारः के वर्णाः का प्रतिष्ठा कैषाधिदेवता किं फलं चेति । तं गुहः प्रत्युवाच प्रवालमौक्तिकस्फटिकशङ्ख-रजताष्टापदचन्दनपुत्रजीविकाब्जे रुद्राक्षा इति । आदिक्षान्तमूर्तिः सावधानभावा । सौवर्णं राजतं ताम्रं तन्मुखे मुखं तत्पुच्छे पुच्छं तदन्तरावर्तनक्रमेण योजयेत् । यदस्यान्तरं सूत्रं तद्ब्रह्म । यद्दक्षपार्श्वे तच्छैवम् । यद्वामे तद्वैष्णवम् । यन्मुखं सा सरस्वती । यत्पुच्छं सा गायत्री । यत्सुषिरं सा विद्या । या ग्रन्थिः सा प्रकृतिः । ये स्वरास्ते धवलाः । ये स्पर्शास्ते पीताः । ये परास्ते रक्ताः । अथ तां पञ्चभिर्गन्धैरमृतैः पञ्चभिर्गव्यैस्तनुभिः शोधयित्वा पञ्चभिर्गव्यैर्गन्धोदकेन संस्राप्य तस्मात्सोङ्कारेण पत्रकूर्चेन स्नपयित्वा-ष्टभिर्गन्धैरालिप्य सुमनःस्थले निवेश्याक्षतपुष्पैराराध्य प्रत्यक्ष-मादिक्षान्तैर्वर्णैर्भावयेत् । ओमङ्कार

मृत्युञ्जय सर्वव्यापक प्रथमेऽक्षे प्रतितिष्ठ ।
ओमाङ्काराकर्षणात्मकसर्वगत द्वितीयेऽक्षे प्रतितिष्ठ ।
ओमिङ्कारपुष्टिदाक्षोभकर तृतीयेऽक्षे प्रतितिष्ठ ।
ओमीङ्कार वाक्प्रसादकर निर्मल चतुर्थेऽक्षे प्रतितिष्ठ ।
ओमुङ्कार सर्वबलप्रद सारतर पञ्चमेऽक्षे प्रतितिष्ठ ।
ओमूङ्कारोच्चाटन दुःसह षष्ठेऽक्षे प्रतितिष्ठ ।
ओमृङ्काकार संक्षोभकर चञ्चल सप्तमेऽक्षे प्रतितिष्ठ ।
ओमॄङ्कार संमोहनकरोजवलाष्टमेऽक्षे प्रतितिष्ठ ।
ओम्लृङ्कारविद्वेषणकर मोहक नवमेऽक्षे प्रतितिष्ठ ।
ओम्लॄङ्कार मोहकर दशमेऽक्षे प्रतितिष्ठ ।
ओमेङ्कार सर्ववश्यकर शुद्धसत्त्वैकादशेऽक्षे प्रतितिष्ठ ।
ओमैङ्कार शुद्धसात्त्विक पुरुषवश्यकर द्वादशेऽक्षे प्रतितिष्ठ ।
ओमोङ्काराखिलवाङ्मय नित्यशुद्ध त्रयोदशेऽक्षे प्रतितिष्ठ ।
ओमौङ्कार सर्ववाङ्मय वश्यकर चतुर्दशेऽक्षे प्रतितिष्ठ ।
ओमङ्कार गजादिवश्यकर मोहन पञ्चदशेऽक्षे प्रतितिष्ठ ।
ओमःकार मृत्युनाशनकर रौद्र षोडशेऽक्षे प्रतितिष्ठ ।
ॐ कङ्कार सर्वविषहर कल्याणद सप्तदशेऽक्षे प्रतितिष्ठ ।
ॐ खङ्कार सर्वक्षोभकर व्यापकाष्टादशेऽक्षे प्रतितिष्ठ ।
ॐ गङ्कार सर्वविघ्नशमन महत्तरैकोनविंशेऽक्षे प्रतितिष्ठ ।
ॐ घङ्कार सौभाग्यद स्तम्भनकर विंशेऽक्षे प्रतितिष्ठ ।
ॐ ङकार सर्वविषनाशकरोग्रैकविंशेऽक्षे प्रतितिष्ठ ।
ॐ चङ्काराभिचारघ्न क्रूर द्वाविंशेऽक्षे प्रतितिष्ठ ।
ॐ छङ्कार भूतनाशकर भीषण त्रयोविंशेऽक्षे प्रतितिष्ठ ।
ॐ जङ्कार कृत्यादिनाशकर दुर्धर्ष चतुर्विंशेऽक्षे प्रतितिष्ठ ।
ॐ झङ्कार भूतनाशकर पञ्चविंशेऽक्षे प्रतितिष्ठ ।
ॐ ञकार मृत्युप्रमथन षड्विंशेऽक्षे प्रतितिष्ठ ।
ॐ टङ्कार सर्वव्याधिहर सुभग सप्तविंशेऽक्षे प्रतितिष्ठ ।
ॐ ठङ्कार चन्द्ररूपाष्टाविंशेऽक्षे प्रतितिष्ठ ।
ॐ डङ्कार गरुडात्मक विषघ्न शोभनैकोनत्रिंशेऽक्षे प्रतितिष्ठ ।
ॐ ढङ्कार सर्वसम्पत्प्रद सुभग त्रिंशेऽक्षे प्रतितिष्ठ ।
ॐ णङ्कार सर्वसिद्धिप्रद मोहकरैकत्रिंशेऽक्षे प्रतितिष्ठ ।
ॐ तङ्कार धनधान्यादिसम्पत्प्रद प्रसन्न द्वात्रिंशेऽक्षे प्रतितिष्ठ ।
ॐ थङ्कार धर्मप्राप्तिकर निर्मल त्रयस्त्रिंशेऽक्षे प्रतितिष्ठ ।
ॐ दङ्कार पुष्टिवृद्धिकर प्रियदर्शन चतुस्त्रिंशेऽक्षे प्रतितिष्ठ ।
ॐ धङ्कार विषज्वरनिघ्न विपुल पञ्चत्रिंशेऽक्षे प्रतितिष्ठ ।
ॐ नङ्कार भुक्तिमुक्तिप्रद शान्त षट्त्रिंशेऽक्षे प्रतितिष्ठ ।
ॐ पङ्कार विषविघ्ननाशन भव्य सप्तत्रिंशेऽक्षे प्रतितिष्ठ ।
ॐ फङ्काराणिमादिसिद्धिप्रद ज्योतीरूपाष्टत्रिंशेऽक्षे प्रतितिष्ठ ।

ॐ बङ्कार सर्वदोषहर शोभनैकोनचत्वारिंशेऽक्षे प्रतितिष्ठ ।
ॐ भङ्कार भूतप्रशान्तिकर भयानक चत्वारिंशेऽक्षे प्रतितिष्ठ ।
ॐ मङ्कार विद्वेषिमोहनकरैकचत्वारिंशेऽक्षे प्रतितिष्ठ ।
ॐ यङ्कार सर्वव्यापक पावन द्विचत्वारिंशेऽक्षे प्रतितिष्ठ ।
ॐ रङ्कार दाहकर विकृत त्रिचत्वारिंशेऽक्षे प्रतितिष्ठ ।
ॐ लङ्कार विश्वंभर भासुर चतुश्चत्वारिंशेऽक्षे प्रतितिष्ठ ।
ॐ वङ्कार सर्वाप्यायनकर निर्मल पञ्चचत्वारिंशेऽक्षे प्रतितिष्ठ ।
ॐ शङ्कार सर्वफलप्रद पवित्र षट्चत्वारिंशेऽक्षे प्रतितिष्ठ ।
ॐ षङ्कार धर्मार्थकामद धवल सप्तचत्वारिंशेऽक्षे प्रतितिष्ठ ।
ॐ सङ्कार सर्वकारण सार्ववर्णिकाष्टचत्वारिंशेऽक्षे प्रतितिष्ठ ।
ॐ हङ्कार सर्ववाङ्मय निर्मलैकोनपञ्चाशदक्षे प्रतितिष्ठ ।
ॐ ळङ्कार सर्वशक्तिप्रद प्रधान पञ्चाशदक्षे प्रतितिष्ठ ।
ॐ क्षङ्कार परापरतत्त्वज्ञापक परंज्योतीरूप शिखामणौ प्रतितिष्ठ ।
अथोवाच ये देवाः पृथिवीपदस्तेभ्यो नमो
भगवन्तोऽनुमदन्तु शोभायै पितरोऽनुमदन्तु
शोभायै ज्ञानमयीमक्षमालिकाम् ।
अथोवाच ये देवा अन्तरिक्षसदस्तेभ्यः  ॐ नमो
भगवन्तोऽनुमदन्तु शोभायै पितरोऽनुमदन्तु
शोभायैज्ञानमयीमक्षमालिकाम् ।
अथोवाच ये देवा दिविषदस्तेभ्यो नमो
भगवन्तोऽनुमदन्तु शोभायै पितरोऽनुमदन्तु
शोभायै ज्ञानमयीमक्षमालिकाम् ।
अथोवाच ये मन्त्रा या विद्यास्तेभ्यो
नमस्ताभ्यश्चोन्नमस्तच्छक्तिरस्याः
प्रतिष्ठापयति ।
अथोवाच ये ब्रह्मविष्णुरुद्रास्तेभ्यः
सगुणेभ्य ॐ नमस्तद्वीर्यमस्याः
प्रतिष्ठापयति ।
अथोवाच ये साङ्ख्यादितत्त्वभेदास्तेभ्यो
नमो वर्तध्वं विरोधेऽनुवर्तध्वम् ।
अथोवाच ये शैवा वैष्णवाः शाक्ताः
शतसहस्रशस्तेभ्यो नमोनमो भगवन्तोऽ-
नुमदन्त्वनुगृह्णन्तु ।
अथोवाच याश्च मृत्योः प्राणवत्यस्ताभ्यो
नमोनमस्तेनैतं मृडयत मृडयत ।
पुनरेतस्यां सर्वात्मकत्वं भावयित्वा भावेन
पूर्वमालिकामुत्पाद्यारभ्य तन्मयीं
महोपहारैरुपहृत्य आदिक्षान्तैरक्षैरक्ष-

मालामष्टोत्तरशतं स्पृशेत् ।
अथ पुनरुत्थाप्य प्रदक्षिणीकृत्यों नमस्ते
भगवति मन्त्रमातृकेऽक्षमाले
सर्ववशङ्कर्योंनमस्ते भगवति मन्त्रमातृकेऽ-
क्षमालिके शेषस्तम्भिन्योंनमस्ते भगवति
मन्त्रमातृकेऽक्षमाले उच्चाटन्योंनमस्ते
भगवति मन्त्रमातृकेऽक्षमाले विश्वामृत्यो
मृत्युञ्जयस्वरूपिणि सकललोकोद्दीपिनि सकललोक-
रक्षाधिके सकललोकोज्जीविके सकललोकोत्पादिके
दिवाप्रवर्तिके रात्रिप्रवर्तिके नद्यन्तरं यासि
देशान्तरं यासि द्वीपान्तरं यासि लोकान्तरं
यासि सर्वदा स्फुरसि सर्वहृदि वाससि ।
नमस्ते परारूपे नमस्ते पश्यन्तीरूपे नमस्ते
मध्यमारूपे नमस्ते वैखरीरूपे सर्वतत्त्वात्मिके
सर्वविद्यात्मिके सर्वशक्त्यात्मिके सर्वदेवात्मिके
वसिष्ठेन मुनिनाराधिते विश्वामित्रेण
मुनिनोपजीव्यमाने नमस्ते नमस्ते ।
प्रातरधीयानो रात्रिकृतं पापं नाशयति ।
सायमधीयानो दिवसकृतं पापं नाशयति ।
तत्सायंप्रातः प्रयुञ्जानः पापोऽपापोभवति ।
एवमक्षमालिकया जप्तो मन्त्रः सद्यः सिद्धिकरो
भवतीत्याह भगवान्गुहः प्रजापतिमित्युपनिअषत् ॥

ॐ वाङ् मे मनसि प्रतिष्ठिता मनो मे वाचि
प्रतिष्ठितमाविरावीर्म एधि ॥ वेदस्य म आणीस्थः
श्रुतं मे मा प्रहासीरनेनाधीतेनाहोरात्रा-
न्सन्दधाम्यृतं वदिष्यामि सत्यं वदिष्यामि ।
तन्मामवतु तद्वक्तारमवतु अवतु मामवतु
वक्तारमवतु वक्तारम् ॥

ॐ शान्तिः शान्तिः शान्तिः ॥ हरिः ॐ तत्सत् ॥

इत्यक्षमालिकोपनिषत्समाप्ता ॥